ஸம்ஸ்க்ருதஶ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका



SAMSKṚTAŚRĪ

ஸம்ஸ்க்ருதஶ்ரீ

A Fortnightly Bulletin of the Samskrit Education Society, Madras.

Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00




9, Single Mall Street, Tiruchirapalli-620 002.

माला—4 पुष्पम्—14

वाग्देव्यै नमः

शुद्धां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्ज्वलां
व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्तांबुजैः।

बिभ्राणां कमलासनां कुचनतां वाग्देवतां सुस्मितां
वन्दे वाग्विभवप्रदां त्रिणयनां सौभाग्यसंपत्करीम् ॥

"दोषहेतूनशेषांश्च वश्यात्मा यो निरस्यति।
तस्य धर्मार्थकामानां हानिर्नाल्पापि जायते॥"

[எவன் கட்டுப்படுத்தப்பட்ட மனத்துடன் எல்லாத் தீய குணங்களின் காரணங்களை விலக்கிக்கொள்கின்றானோ அவனுக்கு அறம், பொருள், இன்பம் என்ற புருஷார்த்தங்களுக்கு குறைவு சிறிதுகூட ஏற்படுவதில்லை.] —விஷ்ணுபுராணம்.



உ

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5083-दुर्मति-मेष-25 (4-14) 7—5—81

हर्तारः शशिकीर्तेः कर्तारो नवभासाम् ।
भर्तारो मम सन्तु स्कन्दाम्बावरहासाः ॥

—उमासहस्रतः

## पञ्चमं तमिल्नाडु संस्कृतसंमेलनम्

परमपूज्य श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु श्रीशंकराचार्यश्रीचरणानां तथेतरेषां परमपूज्य मठाधिपतिश्रीचरणानां चानुग्रहमवलम्ब्य, पञ्चमं संस्कृतमहासंमेलनं मेट्टूर अणै नगरे वैद्येश्वर प्राच्योच्चविद्यालयप्रांगणे ऐषम १९८१ मेमासीय २३–२४ दिनयोः शनिभानुवारयोः संपत्स्यत इति निवेदने परमां मुदमावहति संस्कृतश्रीः। संस्कृतविद्यासमितिद्वारा प्रकल्प्यमानं इदं संमेलनं तत्र निर्वोढुं, मेट्टूरमहिलासंघाध्यक्षायाः श्रीमत्याः शकुन्तला रमणी महाशयाया आध्यक्ष्ये, मेट्टूर केमिकल् अण्ड् इण्डस्ट्रीस् संस्थाया निर्वाहकनिर्देशकस्य श्री रमणीमहोदयस्य नेतृत्वे उपकल्पिता स्वागतसमितिः सर्वान् संस्कृतप्रणयिनः उचितस्थित्यशनादिसभाजनसंविधानेन पुरस्कर्तुं सज्जा सर्वांस्तान् अभ्यर्थयते तत्र सन्निधातुं, प्रतीक्षते च ।

• विद्वत्सदः, कविसंमेलनं, कलाविनोदाः अन्ये च तत्तादृशाः कार्यक्रमाः मनःश्रोत्रदृष्टिप्रीणनाः संविधीयन्ते । संस्कृतश्रियो ग्राहकमहोदया अन्ये च इमामेव प्रातिस्विकतया प्रेषितां समागमप्रार्थनापत्रिकामभिजानन्तः यथाकालं उपस्थाय संमेलनं साफल्येन योजयन्त्विति अभ्यर्थयते संस्कृतश्रीः ।

# ஐந்தாவது தமிழக மாநில ஸம்ஸ்க்ருத மஹாநாடு

பூஜ்யஸ்ரீ காஞ்சீ காமகோடி பீடாதிபதிகளவர்களின் அனுக்ரஹத்துடனும், பிற மடாதிபர்களின் அனுக்ரஹத்துடனும், இவ்வாண்டில் ஸம்ஸ்கிருத மாநில மஹாநாடு, மேட்டூர் அணை நகரில் (சேலம் ஜில்லா) ஸ்ரீவைத்தீச்வர ஓரியண்டல் மேல்நிலைப் பள்ளியில் நிகழும் 1981-ஆம் வருஷம் மே மாதம் 23, 24 (சனிக்கிழமை, ஞாயிற்றுக்கிழமை), ஆகிய இரு தினங்களில் நடைபெற இருக்கின்றது.

மேட்டூர் கெமிகல் & இண்டஸ்ட்ரியல் கார்பொரேஷனின் மானேஜிங் டைரக்டர் ஸ்ரீ R. V. ரமணி அவர்களைப் போஷகராகவும், மேட்டூர் மாதர் சங்கத்தின் தலைவி, ஸ்ரீமதி சகுந்தலாரமணி அம்மையாரைத் தலைவியாகவும், மற்றும் பல முக்யஸ்தர்களை அங்கத்தினராகவும் கொண்ட வரவேற்புக்குழு மஹாநாட்டைச் சிறப்பாக நடத்துவதற்கான ஏற்பாடுகளைச் செய்து வருகின்றது.

மஹாநாட்டிற்கு அண்ணாமலைப் பல்கலைக் கழகத்தின் முன்னாள் புரொபஸர் டாக்டர் C. S. வெங்கடேஸ்வரன் தலைமை தாங்க இசைந்துள்ளார்கள்.

தவத்திரு ஸ்ரீலஸ்ரீ மதுரை திருஞானஸம்பந்த ஆதீனத்தின் ஆதீனகர்த்தர் மஹாநாட்டை துவக்கிவைக்க இசைந்துள்ளார்கள்.

தமிழ்நாட்டின் பல பகுதிகளிலிருந்து ஸம்ஸ்க்ருத வித்வான்களும், மற்றும் பல ஸ்தாபனங்களின் பிரதிநிதிகளும், ஸம்ஸ்க்ருத அபிமானிகளும் மஹாநாட்டில் பங்குகொள்வர்.

வழக்கம்போல் வித்வத்ஸதஸ், கவிஸம்மேளனம், கலை நிகழ்ச்சிகள் முதலியனவும் நிகழ்ச்சிகளில் இடம்பெறும்

வரவேற்புக் குழுவினர், மஹாநாட்டில் கலந்துகொள்ளுவோருக்கு உணவு வசதி, இடவசதி முதலியவற்றிற்கு ஏற்பாடு செய்துள்ளனர். ஸம்ஸ்க்ருத வித்வான்கள் மற்றும் அபிமானிகள் முதலிய யாவரும் அவசியம் மஹாநாட்டிற்கு விஜயம் செய்வதுடன், ஸம்ஸ்க்ருதக் கல்வியின் அபிவிருத்திக்கான தங்கள் மேலான ஆலோசனைகளைத் தெரிவிக்கும்படி வேண்டுகிறோம். ஸம்ஸ்க்ருதஸ்ரீ சந்தாதாரர்கள் இதையே அழைப்பிதழாகக் கருதக் கோருகிறோம்.

ஆசிரியர்

# The Fifth Tamilnadu State Sanskrit Conference

The Fifth Tamilnadu State Sanskrit Conference will be held on 23rd and 24th May, 1981 at the Vaidheeswara Oriental Higher Secondary School, Mettur Dam R.S. (Salem Dt.) **Dr. C. S. Venkateswaran,** Former Prof. of Sanskrit, Annamalai University, has kindly consented to preside.

His Holiness Srilasri the Adhinakarthar of Madurai Adhinam will inaugurate.

Scholars and lovers of Sanskrit from all parts of Tamilnadu will participate.

Subscribers of 'Samskritasri' are requested to participate. It is requested that those who may not be able to attend, may send their valuable suggestions for the promotion of the study of Sanskrit among the masses to the following address before 20—5—81.

The Reception Committee of the Conference has arranged for the boarding and lodging of delegates attending the conference.

Asst. Secretary, Sanskrit Education Society,
*9, Single Mall Street,*
**TIRUCHIRAPALLI—620 002.**

## किमेष भगवान् नन्दी

चरैव चरैव (९)

" चरैव चरैव " इतीन्द्र उपदिदेश रोहितम्। " उत्तिष्ठत जाग्रत प्रेत्य वरान् निबोधत "। अकाण्डे अचिन्त्यतया उपनमन्तं विधिं कथं जानीमः, कथं वा तत्र प्रतिकुर्मः इति संशयोऽधुनापि जागर्त्येव। विधिः कदाचित् फलनोन्मुखं सुकृतदुष्कृतपरिपाकं पुरस्तादावेदयत्येव। परं तेन तथा ज्ञापनं केचनैव प्रत्यभिजानन्ति।

सीतान्वेषणे लब्धसिद्धिर्हनुमान्। विधिः स्वोपगमं रावणाय पूर्वमेव निवेदयितुमिच्छतीव। हनुमान् रावणं दिदृक्षते। विधिस्तत्रोपायं कमपि कमपि साधु घटयति, इन्द्रजिता हनुमतो बन्धावधि। " यद्यधर्मो न बलवान् स्यादयं (इतोऽपि बहून् युगान् यावत) राक्षसेश्वरः। स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता " इति तदीयदिव्यैश्वर्यमोहितो हनुमान्। रावणोऽपि सभागतं तं पश्यति। तथाऽवहेलया पश्यन्तं तं विधिश्चोदयति " समुद्वीक्षस्वैनं " इति। " समुद्वीक्ष्य महाबाहुः पिंगाक्षं पुरतः स्थितम्। रोषेण महताऽऽविष्टः रावणो लोकरावणः। " विधिः परिहसति रावणं—" किमनेन ते रोषेण निरर्थकेन। यथा द्रष्टुमचोदयं तथा न दृष्टवानसि " इति। दशापि शिरांसि विचालयन् रावणः हनुमन्तं पुनः समुद्वीक्षते। काचन शंका उदेति, विद्युदिव तं सा परास्तं करोति। " शंकाहतात्मा सः "। कृच्छ्रादुपलभ्य संज्ञां शंकाबीजमधिकृत्य " दध्यौ "। पुरस्तात् " कपीन्द्रं तेजसाऽऽवृतम् " अपश्यत्। हनुमान् तिरोभवतीव। तेजःपुञ्जो निखिललोकदाहक एकः पुरो भवति। क्षणात् सोऽप्यन्तर्दधाति। पुनः कपीन्द्रः तेजसा समन्तात् वृतः ददृशे। " किमेष भगवान् नन्दी "। " भगवतस्तस्येहागमने कुतो बिभेषि, त्वं शिवगणाग्रगोऽसि " इति काचित्स्मृतिः स्फुरति। " न न। तेन शप्तोऽस्मि कैलासे "। " शिवस्तुतिपरं त्वामपि नन्दी क्षमापेति चिरम् "। " न न—मया प्रहसिते पुरा तदैव

शप्तवान् ”। कुतः प्रहसितम्? रावणो ध्यायतीव तद् वृत्तम्। कुबेरं जित्वा पुष्पकमपहृत्य कैलासं जगाम तेन पुष्पकेन। स्वाधिष्ठातृ-कामगं तद्विमानं विष्टंभितमकस्मात्। वेत्रपाणिः वामनो विकटो मुण्डी ह्रस्वभुजो बली नन्दी विष्टंभकः। “तं दृष्ट्वा वानरमुखमवज्ञाय स राक्षसः प्रहासं मुमुचे। तं क्रुद्धो भगवान्नन्दी शंकरस्यापरा तनुः। अब्रवीत् तत्र तद्रक्षो दशाननमुपस्थितम्। यस्माद्वानररूपं मामवज्ञाय दशानन। अशनीपातसंकाशमपहासं विमुक्तवान्। तस्मान्मद्वीर्यसंयुक्ता मद्रूपसमतेजसः। उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः।” रावणस्य शंका ध्यानेन समाहिता—“सोऽयं वानर मूर्तिः” इति निश्चयो जातः। विधिस्त्ववकाशं ददाति रावणाय स्वानुकूलनाय। नन्दी, तस्य शापः, तस्य प्रसरः, अतः किमप्यत्र प्रतिविधेयं इति चिन्तासन्ततिमुत्पन्नां विघटयति दुष्कृतवासना। स राजा रोषताम्राक्षः प्रहस्तमुवाच “दुरात्मा पृच्छ्यतामेषः” इति।

वयं वृषभमुखं नन्दिनं प्रत्यभिजानीमो न वानरमुखम्। रावणो दशास्यो विंशतिनेत्रः तं वानरमुखं पश्यति कैलासे। भगवान् नन्दी आत्मानं वानरमुखं परिहसन्तं तं शपति। लंकायां पुरतः स्थितं कपीन्द्रं रावणः समुद्वीक्षते, शंकते नन्दिनमागतम्। अपि नन्दी वानरमुखः? वृषभमुखतया ज्ञातपूर्वो नन्दी—स कः? इति जिज्ञासते चेतः।

वामनपुराणे ६४ अध्याये कथैषा। शिवस्त्रिपुरविजयाय प्रतिष्ठासुः सेनासन्नाहाय प्रचोदयति शैलादिं नन्दिनम्। स सन्दर्भः नन्दिनं यथारावणदृष्टं उपस्थापयति। “हरोऽपि शंबरे याते समाहूयाशु नन्दिनम्। प्राहामन्त्रय शैलादे ये स्थितास्तव शासने। ततो महेशवचनान्नन्दी सर्वगणाधिपः। उपस्पृश्य जलं धीमान् सस्मार गणनायकान्। नन्दिना संस्मृताः सर्वे गणनाथाः सहस्रशः। समुत्पत्य त्वरायुक्ताः प्रणतास्त्रिदशेश्वरम्। आगतांश्च गणान्नन्दी

कृताञ्जलिपुटोऽव्ययः। सर्वान्निवेदयामास शंकराय महात्मने। नन्द्युवाच—

यानेतान्पश्यसि पुरः त्रिणेत्रान् जटिलान् शुचीन्।
एते रुद्रा इति ख्याताः कोट्य एकादशैव च॥
वानरास्यान् पश्यसि यान् शार्दूलसमविक्रमान्।
एते वै द्वारपालास्ते मन्नामानो यशोधनाः॥

एवं शैवपाशुपतसप्तमातृककौमारादिगणान् विज्ञापयति नन्दी शंभवे। नन्दी तदीया गणाश्च वानरमुखाः इति अयं सन्दर्भः दशास्यसमुद्वीक्षितं वानरमुखं प्रमाणयति।

विधिर्न सर्वदा अप्रतीक्षित एवोपनमत्यप्रतर्क्यश्च। कदाचित् पाकोन्मुखं दुष्कृतं सुकृतं च पुरत उपस्थापयति, जितेन्द्रियैः प्रतिविधेयतया। अजितेन्द्रियास्तु वासनाबलात् प्राप्तमवकाशं स्वानुकूलतया समर्थयितुं न प्रभवन्ति। नैष विधेर्दोषः।

---

## कः पुमान्?

युधिष्ठिरो दुर्योधनाय सन्देशं प्रेरयति उलूकमुखेन।

(महाभारते उद्योगपर्वणि १६२)

"स्ववीर्याद्यः पराक्रम्य पाप आह्वयते परान्।
अभीतः पूरयन् वाक्यमेष वै क्षत्रियः पुमान्॥
आत्मवीर्यं समाश्रित्य भृत्यवीर्यं च कौरव।
आह्वयस्व रणे पार्थान् सर्वथा क्षत्रियो भव।
परवीर्यं समाश्रित्य यः समाह्वयते परान्।
अशक्तः स्वयमादातुमेतदेव नपुंसकम्॥"

ये वेतनदानेन स्वकार्यसिध्यै भ्रियन्ते कर्मकराः, ते भृत्याः। ते वेतनं गृह्णीयुः, परं वेतनदात्रर्थे सर्वात्मना यतेरन् वेति यदि सन्दिह्यते, तर्हि ते न प्रत्यायनीयाः। धर्मे नीतौ च ये निष्ठां वहन्ति, ते एव स्वे वीर्ये प्रत्ययं वहेयुः। उभयत्रापि भ्रष्टा इदानीं दृश्यन्ते। अत एव पौरुषं न कुत्रापि दृश्यते।

"சிறு வயதுமுதல் செல்வந்தனாவது, இளமைப் பருவம் ஒப்பற்ற அழகு, மனித இயல்புக்கப்பாற்பட்ட சக்தி ஆகியவை நிச்சயமாக தீங்குகளின் வரிசையாகும்".

—சுகநாஸ உபதேசம், காதம்பரீ.



# FIFTY LIGHT YEARS IN INDIA

LUMINAIRES FACTORY, CALCUTTA

SON LAMPS
ARGENTA SUPERLUX

1975
BOWL REFLECTOR LAMPS

ORTHO CYCLIC BALLAST

AIR HANDLING LUMINAIRES
PHOTOGRAPHIC LAMPS

1000W
HIGH PRESSURE
MERCURY VAPOUR
LAMPS

REFLECTOR LAMPS
HALOGEN LAMPS

LIGHT FACTORY—KALWA
FLUORESCENT POWDER
DIAMOND DIES

LEADING
IN WIRES

1967

TLF FLUORESCENT LAMPS
WITH BUILT IN REFLECTOR

BOMBAY LIGHT FACTORY
—MAZAGON

PREFOCUS
FLASHLIGHT
LAMPS

POLYESTER FILLED BALLASTS

BURNERS FOR
MERCURY
VAPOUR LAMPS

1962

HIGH WATTAGE
COILED COIL LAMPS

MERCURY
VAPOUR LAMPS

FLUORESCENT
STARTERS

TUNGSTEN COILS
MOLYBDENUM WIRES

LIGHTING
FITTINGS

FLUORESCENT
BALLASTS

LAMP HOLDERS
STARTER HOLDERS

1500W
INCANDESCENT
LAMPS

20W & 80W
FLUORESCENT LAMPS

ARGENTA & 1000W
INCANDESCENT LAMPS

DECORATIVE LAMPS

1952
MINIATURE LAMPS

40W FLUORESCENT
LAMPS

GLASS SHELLS
1945

LOCOHEAD
LAMPS

200W-500W
INCANDESCENT

FIRST INDIAN-MADE
PHILIPS LAMPS;
15W-150W INCAND.
TRAIN LUSTRE




**PHILIPS**







# Our wide, wide range: It's only 50% of our story.

Yes. It's true that Colour-Chem offers you a wide range of pigments and dyes. Which covers a complete spectrum of shades —from yellow to black—for every product line. And which covers a variety of properties and price levels as well. To meet all your requirements.

And, what's more, this range keeps growing wider.

Yet, this is only 50% of our story...

The other 50% is the fact that our products are the result of world-class technology. And every batch is rigorously tested before it comes to you. To help you get good results. Batch after batch.

What's more, when dealing with us you get the benefit of our reliable technical service. Whether it's a question of assisting you with formulations and colour matching. Or helping you solve some tricky technical problem that threatens to disrupt your production.

These are the two halves of our story. And they add up to one thing: if you're in the market for pigments and dyes, your best bet is Colour-Chem.

Colour-Chem

COLOUR-CHEM LIMITED, 194, Churchgate Reclamation, Bombay 400 020

**Colour is the business of Colour-Chem**

CC-6038

जीवितादधिकवत्सलभावात् पुत्रके सपदि सापि बभूव ।
बाष्पदूषिततदाननवीक्षासंक्रमादिव समुद्गलदश्रुः ॥

அவளும் பிள்ளையிடத்தில் உயிரைவிட அதிகம் பிரியம் வைத்துள்ளமையால் கண்ணீரால் கலங்கிய அவனது முகத்தைப் பார்த்ததால் தொத்திக்கொண்டதுபோல் பொங்கும் கண்ணீர் உள்ளவளாக ஆனாள். 40

उद्गलन्तमपि बाष्पमसौ स्वं बालकस्य बहुरोदनहेतुम् ।
तं कथंचन निरुध्य सुनीतिः तात रोदिषि कुतो न्विति पृष्ट्वा ॥
बालकं सपदि पाणितलाभ्यां अंकके ऽभिमुखमादधती सा ।
पल्लवोपमदुकूलपटान्तैः सादरं परिममार्ज तदास्यम् ॥

இந்த ஸுநீதி சிறுவனின் அழுகைக்குக் காரணமாகக்கூடிய பொங்கிவரும் தன் கண்ணீரை எப்படியோ அடக்கிக்கொண்டு, "குழந்தாய்! ஏன் அழுகிறாய்" எனக்கேட்டு உடன் தன்னிருகைத் தலங்களால் குழந்தையை மடியில் தனக்கு எதிராக அமர்த்தியவளாக இளந்தளிர் போன்ற ஆடை நுனியால் பரிவுடன் அவன் முகத்தைத் துடைத்தாள். 41, 42

अश्रुवर्षमपनीय कपोले पाणिना मृदुतरेण मृजन्ती ।
मा रुदस्त्वमिति बालकमेषा वाममंसमनु शाययति स्म ।

கண்ணீர் பெருக்கைத் தடுத்துக் கன்னத்தில் மிக மென்மையான உள்ளங்கையால் வருடி நீ அழாதே எனக் கூறி அவள் சிறுவனை இடது தோளின்மேல் சாய்த்து வைத்துக்கொண்டாள். 43

दुःखपूरपरिवाहवदस्य द्रागदृशो विगलतोऽश्रुझरस्य ।
वीक्षणेन नितरां द्रुतचित्ता सा मुहूर्तमिव चेतसि दध्यौ ॥

துக்க வெள்ளப் பெருக்கு போன்று கண்களிலிருந்து பெருகும் கண்ணீர் அருவியைச் சிறிது உற்று நோக்கியதால் முழுதும் உருகிய மனமுள்ளவளான அவள் சிறிது மனத்தில் சிந்தித்தாள். 44

आदरेण बहुधापि च पृष्टं वक्तुमप्ययमहह दुःखमशक्तः ।
जोषमेवमरुदद्यदयं तत् कीदृशं न्विति न कष्टमवैमि ॥

பரிவுடன் பலவிதமாகக் கேட்கப்பட்டும் துக்கத்தைக் கூறக் கூட சக்தியற்றவனாக மௌனமாக இவன் அழுதான் என்பதால் கஷ்டம் எத்தகையது என்பதை அறியேன். 45

कर्तुमाश्वसनमस्य यदुक्तं कष्टहेतुरिदमेव बताभूत् ।
शान्तये विरचिता पुटवह्नेः फूत्कृतिर्ज्वलयति स्म तमेव ॥

தேறுதலளிக்க எது கூறப்பட்டதோ அதுவே கஷ்டத்திற்குக் காரணமாகவல்லவா ஆகிவிட்டது. குழிநெருப்பை அணைப்பதற்காக ஊதியது நெருப்பைத் தூண்டி எரியவிட்டதுபோல். 46

शृण्वता मम किल प्रियवाचं रोदितुं प्रववृते यदसह्यम् ।
केनचिद् बलवती तदवज्ञा नूनमस्य रचितेति विभाति ॥

என் அன்பு மிக்க வார்த்தை கேட்ட அவனால் தாங்கமுடியாதபடி அழத் தொடங்கப்பெற்றதென்றால் யாரோ ஒருவரால் இவனுக்கு பலத்த அவமானம் செய்யப்பட்டுள்ளதெனத் தோன்றுகிறது. 47

कुत्रचिच्च कुपथेऽनुपयान्तं नन्दनं मम निसर्गत एव ।
इत्थमाकुलयितुं शिशुमेनं कस्य वात्र हतकस्य मनोऽभूत् ॥

இயற்கையாகவே எங்கும் கெட்ட வழியில் செல்லாத என் செல்லப் பிள்ளையை–இந்தச் சிசுவை இப்படிக் கலக்குவதற்கு எந்தக் கொலைகாரனுக்கு மனம் இருந்தது? 48

दुःखमीदृशमिदं हि मनस्वी विस्मरिष्यति कथं मम बालः ।
क्रीडनेन कतमेन कथं वा वत्सकं बत विनोदयिताऽस्मि ॥

ஆழ்ந்த எண்ணமுள்ள இந்த என் குழந்தை இத்தகைய துக்கத்தை எப்படி மறக்கப்போகிறான்? இந்தச் சிறுவனுக்கு எத்தகைய விளையாட்டால் மனமாற்றமளிக்கப் போகிறேன்? 49

दर्शनं भवति यस्य मुखेन्दोः एकमेव मम जीवितहेतुः ।
दुःखमस्य हि कथं सुसहं स्यादित्यसौ हृदि भृशं परितेपे ॥

எவனது சந்திரனைப் போன்ற முகத்தைக் காண்பதொன்றே எனக்கு உயிர்த்திருக்கக் காரணமோ, அவனது துக்கம் எப்படி எளிதில் தாங்கக்கூடியதாக ஆகும் என அவள் உள்ளத்தில் மிகவும் வேதனைப் பட்டாள். 50

लोभनीयमथ सादरमस्मै स्वादु भक्ष्यमुपनीय दिशन्ती ।
शीतलं सुरभिलं च सुनीतिः स्वादु पेयमपि पाययति स्म ॥

அந்த ஸுநீதி பரிவுடன் அவன் மனத்தைக் கவரக்கூடிய இனிய பக்ஷணத்தைக் கொணர்ந்து அளித்தவளாகக் குளிர்ந்ததும் நறுமணமுள்ளதுமான இனிய பானத்தையும் பருகச்செய்தாள். 51

ईदृशैः प्रियतमैरुपचारैः अस्य शोकमपनीय मनस्स्थम् ।
पाणिना मृदुलमादरभारात् स्पृष्टपाणितलमेनमपृच्छत् ॥

இத்தகைய மிகுந்த பிரியமான உபசாரங்களால் அவனது மனத்திலுள்ள வேதனையைப் போக்கி மென்மையுடன் பரிவுடன் கையால் அவன் கைத்தலம் பற்றியபடி அவனைக் கேட்டாள். 52

तात वत्स सुमते किमपि त्वामद्य वच्मि शृणु मा रुदिहि त्वम् ।
उत्सृजन् शुचमुदीरय तत्वं तात किं नु तव दुःखनिदानम् ॥

அப்பா, குழந்தாய், நல்ல புத்தியுள்ளவனே! உன்னை ஒன்று கூறுவேன் கேள். அழாதே, வேதனையை விட்டவனாக உண்மையைக் கூறுவாய்! குழந்தாய் உன் துக்கத்தின் காரணம் எது? 53

विद्रुताः सपदि येन मदीयाः कर्णदेशकलिता अपि वाचः ।
पेतुरश्रुमिषतो नयनाभ्यां तादृशः कथय कस्तव तापः ॥

காதுப்புறத்தில் கூறப்பட்ட என் சொற்கள் கூட உருகிக் கண்ணீரென்ற போலி வடிவில் கண்களிலிருந்து விழுமளவிற்கு உனக்கு ஏது இந்த உள்ளக்கொதிப்பு? சொல்! 54

तापहेतुमवदन् पुनरित्थं खिद्यसे यदि सहे नतरां तत् ।
क्लेशनं मम विधेयमिति त्वं मन्यसे यदि रुदिह्ययि तूष्णीम् ॥

உள்ளக்கொதிப்பிற்கான காரணத்தைக் கூறாதவனாக வேதனைப் படுவாயேயானால் அதனை நான் பொறுக்கமாட்டேன். எனக்குத் துன்பம் ஏற்படுத்தவேண்டியதென எண்ணினாயேயானால் பதில் கூறாமல் அழு. 55

इत्थमात्मजननीपरिपृष्टः तद्गिरा शमितमानसखेदः ।
तामवेक्ष्य सदयो निजचित्ते घूर्णमानमवदद् ध्रुव एषः ॥

இப்படித் தனது தாயால் கேட்கப்பெற்று அவளது பேச்சால் மனக்கஷ்டம் தணிந்தவனாக அவளை நோக்கிப் பரிவுடன் அந்தத் துருவன் தன் உள்ளத்தில் புயலைப்போல் சுழன்றுகொண்டிருப்பதைக் கூறினான். 56

मातरीरय नृपस्य महिष्यौ तुल्यमेव सुरुचिर्भवती च ।
एनयोस्त्वपि महानपरागः सा परं प्रियतमेति किमेतत् ॥

அம்மா! சொல்! அரசருக்கு இரு பத்தினிகள். ஸுருசியும் தாங்களும் என்பது சமமானதே. இருவர்களுக்குள் தங்களிடத்தில் பெருத்த வெறுப்பு என்பதும் அவள் மட்டும் மிக அன்புக்குரியவள் என்பதும் எப்படி? 57

किञ्च सा सुरुचिरेव सुकुक्षिः शोभनैरपि तपोभिरुपेता ।
पापिनी दुरुदरा भवतीति व्यक्तमत्र मम जल्प निदानम् ॥

மேலும் அந்த ஸுருசி மட்டுமே நல்ல வயிறு படைத்தவள் – மங்களம் தரும் தவமுடையவள். தாங்களோ பாவி, கெட்ட வயிறு படைத்தவள் – என்ற இவ்விஷயத்தில் காரணத்தைப் புரியும்படி கூறுங்கள். 58

द्वावपीह युवयोस्तनुजातौ उत्तमोऽहमपि राजकुमारौ ।
उत्तमस्तु परमुत्तमभूतः केन वायमधमोऽहमभूवम् ॥

உங்கள் இருவருக்கும் பிறந்த இருவர் உத்தமனும் நானும். அரசரின் குமாரர்கள். ஆனால் உத்தமன் உத்தமனாகவும் நான் அதமனாகவும் ஆனது எதனால்? 59

विष्टरं नरपतेरधिरोढुं सम्यगर्हति स उत्तम एव ।
यत्र कुत्रचिदहं पुनरर्हः स्थातुमेव किमु कोऽत्र च हेतुः ॥

அரசரது ஆஸனத்தில் ஏற அந்த உத்தமன் மட்டும் தகுதி உள்ளவனாகிறான். ஏதேனும் ஓரிடத்தில் இருக்க மட்டுமே நான் தகுதி உள்ளவன். இது ஏன்? இதற்குக் காரணமென்ன? 60

मत्कृते लवमलीकमनुक्त्वा सर्वमेतदभिधेहि यथार्थम् ।
बालकेन दृढमित्यनुयुक्ता भाषितुं प्रववृतेऽथ सुनीतिः ॥

எனக்காகச் சிறிதளவு பொய் சொல்லாமல் எல்லாவற்றையும் உண்மையாக நடந்தபடி கூறுங்கள் எனச் சிறுவனால் வலியுறுத்திக் கேட்கப்பட்ட ஸுநீதி பேசத் தொடங்கினாள். 61

सा सुदूरमपहाय सपत्न्यां स्त्रीस्वभावसहजां यदसूयाम् ।
पुत्रकं प्रति जगाद तदेतत् चित्रमेव यदि सा न सुनीतिः ॥

அவள் சக்களத்தியிடம் பெண்மைக்கு இயற்கையான அஸூயையை வெகு தூரத்தில் அகற்றிப் பிள்ளையிடம் இப்படிச் சொன்னாள். இது ஸுநீதியாக இல்லாதிருந்தால் தான் ஆச்சரியம். 62

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

पाठमाला अनुबन्धः ८२ பாடமாலா தொடர் 82

## त्र्युत्तरशततमः पाठः —பாடம் 103

# संक्षिप्तं अभिज्ञानशाकुन्तलम्–१०

[अनसूया प्रियंवदा च शकुन्तलायाः सख्यौ। शकुन्तलां तौ परिचरतः। राजा ताभ्यां सह भाषमाणः तिष्ठति।]

प्रियंवदा —(सदृष्टिक्षेपं) अनसूये! एषः मृगपोतकः मातरं अन्विष्यति। एहि, संयोजयाव एनं मात्रा।

शकुन्तला—हला, अशरणा अस्मि। युवयोरन्यतरा गच्छतु।

सख्यौ—पृथिव्याः यः शरणं, सः तव समीपे वर्तते। (गच्छतः)

शकुन्तला—कथं गते एव ?

राजा—अलमावेगेन। अयं जनः तव आराधयिता। स तव समीपे वर्तते। किं शीतलैः नलिनीदलैः वीजयामि ? उत तव चरणौ सम्वाहयामि।

शकुन्तला—माननीया भवन्तः। तेषु न आत्मानं अपराधयिष्ये। (इति उत्थाय गन्तुं इच्छति।)

राजा—सुन्दरि! कुसुमशयनं उत्सृज्य कथं आतपे गमिष्यसि ? (इति बलात् एनां निवर्तयति)

शकुन्तला—पौरव! विनयं रक्ष! अहं आत्मनो न प्रभवामि।

राजा—भीरु! अलं गुरुजनेभ्यो भयेन। तत्रभवान् कुलपतिः धर्मं वेत्ति। अत्र स न दोषं ग्रहीष्यति। बह्व्यो राजन्यकन्यकाः गान्धर्वेण विवाहेन परिणीताः। ताः पितृभिः अभिनन्दिताश्च।

शकुन्तला–मां मुञ्च। सखीभ्यां भूयः अनुमतिं लप्स्ये।

राजा—भवतु। मोक्ष्यामि।

शकुन्तला—कदा ?

नेपथ्ये—अयि सहचरं आमन्त्रयस्व। रजनी उपस्थिता।

शकुन्तला—(ससंभ्रमं) पौरव ! असंशयं आर्या गौतमी इतः आगच्छति। तत् विटपान्तरितो भव।

राजा—तथा। (इत्यन्तरितः तिष्ठति)

परिचरति (परिचरतः परिचरन्ति) பணிவிடை புரிகிருள். सदृष्टिक्षेपं கண்ணடித்தலுடன், வியங்கியமாக. पोतकः குட்டி. अन्विष्यति (अन्विष्यतः अन्विष्यन्ति) தேடுகிறது. संयोजयाव (संयोजयानि संयोजयाव संयोजयाम) (இருவரும்) சேர்த்து வைப் போம் शरणं தன்னைப் பாதுகாப்பான் என நம்பி ஒப்புவிக்கும் இடம். अशरणा காப்பவரற்றவள். युवयोः अन्यतरा இருவர் களில் ஒருவள். आराधयिता திருப்தி வரும்படி நடந்து கொள் பவன். संवाहयामि (संवाहयावः संवाहयामः) களைப்பு தீரும்படி பிடித்து விடுகிறேன். माननीयाः மதிக்கப்பட வேண்டியவர்கள், न आत्मानं अपराधयिष्ये தன்னை திருப்திக்குறைவாக நடந்துகொள் பவளாக ஆக்கிக்கொள்ளமாட்டேன். अपराधयिष्ये अपराधयिष्यावहे अपराधयिष्यामहे. अपराधयते திருப்திக்குறைவாக நடந்து கொள்கிருன், தவறுதலாக நடந்து கொள்கிருன், தண்டனைக்குரிய வராக நடந்து கொள்கிருன். आत्मनः न प्रभवामि என் விஷயத் தில் என்னிஷ்டப்படி நடக்க முடியாதவளாக இருக்கிறேன். प्रभवामि எனக்கு நானே எஜமானி என்ற எண்ணத்துடன் நடக்கிறேன். राजन्यः அரச வம்சத்தைச் சேர்ந்தவன். सहचरं आमन्त्रयस्व கூட இருப்பவரிடம் விடைபெற்றுக் கொள்வாய். रजनी இரவு. उपस्थिता நெருங்கிவிட்டது. असंशयं ஐயமின்றி. विटपान्तरितः கிளையை இடையில் கொண்டவன். கிளையால் தன்னை மறைத்துக்கொண்டவன்.

பயிற்சிகள் :

1. இந்த பாடத்தைத் தமிழில் மொழி பெயர்க்கவும்.
2. ஸந்தி சேர்ந்திராத பதங்களைச் சேர்த்து எழுதவும்.
3. ஸந்தி சேர்ந்துள்ளதைப் பிரித்தெழுதவும்.
4. கீழ்க்கண்டவற்றில் கர்மணிப்பிரயோகத்தில் உள்ளவற்றை கர்த்தரிப் பிரயோகத்திலும், கர்த்தரி பிரயோகத்தில் உள்ளதைக்

கர்மணிப் பிரயோகத்திலும் மாற்றவும்.

1 मृगपोतकः मातरं अन्विष्यति। (अन्विष्यते)
2 बलात् एनां निवर्तयति। (निवर्त्यते)
3 ताः पितृभिः अभिनन्द्यन्ते। (अभिनन्दयति)
4 आर्या गौतमी इह आगच्छति। (आगम्यते)
5 कन्यकाः परिणीयन्ते। (परिणयन्ति)

## चतुरुत्तरशततमः पाठः—பாடம் 104

## हिमालय वर्णनम्

"अस्ति कश्चित् वाग्विलासः ?" [கவிதைத்திறன் ஏதாவது உளதா ?] என்று காளிதாஸனை மணந்த ராஜகுமாரி அவனுக்கு சவால் விட்டதாய் வரலாறு. அச்சவாலில் உள்ள மூன்று சொற்களையும் முதற்பதமாகக் கொண்டு காளிதாஸன் மூன்று காவியங்கள் இயற்றினார். முதற்காவியம் குமார சம்பவம் अस्ति என்று தொடங்குகிறது. முருகன் பிறப்பதற்குக் காரணமான பார்வதியின் கல்யாண வரலாற்றை விவரிக்கிறது. அதிலுள்ள ஹிமாலய வர்ணனத்தை அப்படியே வசனப்படுத்தித் தருகிறோம். பாடத்தின் முடிவில் செய்யுள் வடிவத்தில் காளிதாஸனுடைய கவிதையும் தரப்படுகிறது. ஒப்பு நோக்கிப் பயன்பெறலாம்.

1 उत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगानां अधिराजः अस्ति। सः पूर्वापरौ वारिनिधी वगाह्य पृथिव्याः मानदण्ड इव स्थितः।

2 तं सर्वे शैलाः वत्सं परिकल्प्य पृथुना उपदिष्टां (गोरूपधरां) धरित्रीं भास्वन्ति रत्नानि महौषधीः च दुदुहुः। दोहदक्षः मेरुः (पर्वतः) दोग्धा (आसीत्)।

3 (पुण्यक्षेत्राणि,–दिव्याः ओषधयः, गंगा यमुना इत्यादयः पुण्यनद्यः इति) अनन्तानां रत्नानां प्रभवस्य तस्य हिमं सौभाग्य-विलोपि न जातं। हि (यतः) एकः दोषः गुणानां सन्निपाते निमज्जति इन्दोः किरणेषु अंकः (कलंकः) इव।

4 सः बलाहकानां छेदेन विभक्तरागां धातुमत्तां शिखरैः बिभर्ति। सा अप्सरःस्त्रीणां शृंगारमण्डनं संपादयति। अकाल-सन्ध्येव भाति।

5 तस्य आमेखलं (मेखलापर्यन्तं) घनाः संचरन्ति। अधः सानुषु तेषां छायां निरीक्ष्य वृष्टिभिः उद्वेजिताः सिद्धाः (ऊर्ध्वमारुह्य) आतपवंति शृंगाणि आश्रयन्ते।

6 तत्र केसरिणः द्विपान् हत्वा (तेषां मांसानि भुक्त्वा) निलयनस्थानं गच्छन्ति। रक्तांकितैः तेषां पदचिन्हैः किराताः सिंहान् मार्गयन्ते। परन्तु तुषारस्रुतिभिः पदानि (पदचिन्हानि) धौतरक्तानि भवन्ति। अथापि नखरन्ध्रमुक्तैः मुक्ताफलैः तानि विन्दन्ति।

7 तत्र पर्वते भूर्जवृक्षाः सन्ति। तेषां त्वचः कुंजरबिन्दुवत् शोणाः वर्तन्ते। तासु धातुरसेन अक्षराणि विन्यस्य विद्याधर-सुन्दर्यः अनंगलेखं प्रेषयन्ति। एवं भूर्जपत्राणि अनंगलेखक्रियायां उपयोगं प्राप्नुवन्ति।

8 तत्र कीचकाः बहवः सन्ति दरीमुखात् उत्थितः समीरणः कीचकानां रन्ध्रभागान् पूरयति। तेन हिमालयपर्वतः तत्र गास्यतां किन्नराणां तानं ददातीव।

கடினபதங்கள் : देवतात्मा தேவருபியான. नगानां மலைகளுடைய. पूर्व கிழக்கு. अपर மேற்கு. वारिनिधिः கடல். वगाह्य அமிழ்ந்து நின்று. मानदण्डः அளவுகோல். scale. उपदिष्टां காட்டப்பட்ட. भास्वन्ति ஒளிமிக்க. दुदुहुः கறந்தனர். दोहदक्षः கறவையில் கெட்டிக்காரனை. दोग्धा இடையர். प्रभवः உற்பத்திஸ்தானம். सौभाग्य विलोपि பெருமையை குலைப்பதாக. सन्निपातः குவியல். अंकः களங்கம் Black Spot. वलाहकः மேகம். छेदः பின்னணி. Back drop विभक्तरागां விளக்கப்பட்ட நிறவேற்றுமை உள்ள. धातुमत्तां சிவப்பு நிறப்பாறையை. शृंगारमण्डनं காதல் புரியத் தேவையான உடலலங்காரத்தை. सन्ध्या மாலை (செவ்வான முள்ளது) मेखला நடுப்பகுதி (ஒட்டியானம்). सानुः தாழ்வரை. उद्वेजिताः பயமுறுத்தப்பட்ட. आतपवन्ति வெயிலுள்ள. केसरिणः சிங்கங்கள். निलयनस्थानं மறைவிடம். अंकितैः அடையாளமிடப்பட்ட. तुषारस्रुतिः பனிப்பெருக்கு. धौतरक्तानि கழுவப்பட்ட ரக்தமுள்ள. नखरन्ध्रः நக இடுக்கு. भूर्जवृक्षः ஒருவகை மரம் கடிதம் போல் உரிபடுகின்ற தோல் உள்ளது. कुंजरविन्दुः யானையின் மதநீர். शोणा இளஞ்சிவப்பான. धातुरसः மனோசிலை

R. N. 30478/77—SAMSKRITA SRI—7-5-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.



Printed by S. Naganathan, at Theni Printers, Trichy, Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society, (Regd.) Trichy Branch : 9, Single Mall Street, Tiruchirapalli-620 002.